सिक्खिस्सामि त्ति ।
शिक्षिष्य इति ।

पद्मावती—उत्तो मए अय्यउत्तो ।
उक्तो मया आर्यपुत्रः ।

वासवदत्ता—तदो किं भणिदं ।
ततः किं भणितम् ।

पद्मावती—अभणिअ किञ्चि दिग्घं णिस्ससिअ तुह्णीओ
अभणित्वा किञ्चिद् दीर्घं निःश्वस्य तूष्णीकः
संवुत्तो ।
संवृत्तः ।

वासवदत्ता—तदो तुवं किं विअ तक्केसि ।
ततस् त्वं किम् इव तर्कयसि ।

पद्मावती—तक्केमि अय्याए वासवदत्ताए गुणाणि सुमरिअ
तर्कयाम्य् आर्याया वासवदत्ताया गुणान् स्मृत्वा
दक्खिण्णदाए मम अग्गदो ण रोदिदि त्ति ।
दाक्षिण्यतया मम अग्रतो न रोदिति इति ।

वासवदत्ता—[ आत्मगतम् ] धञ्ञा खु ह्मि जदि एव्वं
धन्या खल्व् अस्मि यद्य् एवं
सच्चं भवे ।
सत्यं भवेत् ।

[ ततः प्रविशति राजा विदूषकश्च ]

विदूषकः—ही ही । पचिअपडिअबन्धुजीवकुसुमविरळवादरमणिज्जं
ही ही । प्रचितपतितबन्धुजीवकुसुमविरलपातरमणीयं
पमदवणं । इदो दाव भवं ।
प्रमदवनम् । इतस् तावद् भवान् ।

राजा—वयस्य वसन्तक अयमहमागच्छामि ।

कामेनोज्ञयिनीं गते मयि तदा कामप्यवस्थां गते
दृष्ट्वा स्वैरमवन्तिराजतनयां पञ्चेषवः पातिताः ।
तैरद्यापि सशल्यमेव हृदयं भूयश्च विद्धा वयं
पञ्चेषु र्मदनो यदा कथमयं षष्ठः शरः पातितः ॥१॥

विदूषकः—कहिं णु खु गदा तत्तहोदी पदुमावदी । ळदामण्डवं
कुत्र नु खलु गता तत्रभवती पद्मावती । लतामण्डपं
गदा भवे । उदाहो असणकुसुमसञ्चिदं वग्घचम्मावगुण्ठिदं विअ पव्वदतिळअं णाम सिळापट्टअं गदा
गता भवेत् । उताहो असनकुसुमसञ्चितं व्याघ्रचर्मावगुण्ठितम् इव पर्वततिलकं नाम शिलापट्टकं गता
भवे । आदु अधिअकडुअगन्धसत्तच्छदवणं पविट्ठा
भवेत् । अथवा अधिककटुकगन्धसप्तच्छदवनं प्रविष्टा
भवे । अहव आळिहिदमिअपक्खिसङ्कुळं दारुपव्वदअं
भवेत् । अथवा आलिखितमृगपक्षिसङ्कुलं दारुपर्वतकं
गदा भवे [ऊर्ध्वमवलोक्य] ही ही सरअकाळणिम्मळे
गता भवेत् । ही ही शरत्कालनिर्मले
अन्तरिक्खे पसादिअबळदेवबाहुदंसणीअं सारसपन्तिं
ऽन्तरिक्षे प्रसादितबलदेवबाहुदर्शनीयां सारसपंक्तिं
जाव समाहिदं गच्छन्तिं पेक्खदु दाव भवं ।
यावत् समाहितं गच्छन्तीं पश्यतु तावद् भवान् ।

राजा—वयस्य पश्याम्येनाम्

ऋज्वायतां च विरलां च नतोन्नतां च
सप्तर्षिवंशकुटिलां च निवर्तनेषु ।
निर्मुच्यमानभुजगोदरनिर्मलस्य
सीमामिवाम्बरतलस्य विभज्यमानाम् ॥ २ ॥

चेटी—पेक्खदु पेक्खदु भट्टिदारिआ एदं कोकणदमाळा-
पश्यतु पश्यतु भर्तृदारिका एतां कोकनदमाला-

पण्डररमणीअं सारसपन्तिं जाव समाहिदं गच्छन्तिं ।
पाण्डुररमणीयां सारसपङ्क्तिं यावत् समाहितं गच्छन्तीम्
अम्मो भट्टा ।
अहो भर्ता ।

पद्मावती—हं अय्यउत्तो । अय्ये तव कारणादो अय्यउत्तदंसणं
हम् आर्यपुत्रः । आर्ये तव कारणाद् आर्यपुत्रदर्शनं
परिहरामि । ता इमं दाव माहवीळदामण्डवं पविसामो
परिहरामि । तद् इमं तावन्माधवीलतामण्डपं प्रविशामः

वासवदत्ता—एव्वं होदु ।
एवं भवतु । [तथा कुर्वन्ति]

विदूषकः—तत्तहोदी पदुमावदी इह आअच्छिअ णिग्गदा भवे ।
तत्रभवती पद्मावती इह आगत्य निर्गता भवेत् ।

राजा—कथं भवान् जानाति ।

विदूषकः—इमाणि अवइदकुसुमाणि सेफाळिआगुच्छआणि
इमान् अपाचितकुसुमान् शेफालिकागुच्छकान्
पेक्खदु दाव भवं ।
प्रेक्षतां तावद् भवान् ।

राजा—अहो विचित्रता कुसुमस्य वसन्तक ।

वासवदत्ता—[आत्मगतम्] वसन्तअसंकित्तणेण अहं पुण जाणामि
वसन्तकसंकीर्तनेन अहं पुनर् जानामि
उज्जइणीए वत्तामि त्ति ।
उज्जयिन्यां वर्त इति ।

राजा—वसन्तक अस्मिन्नेवासीनौ शिलातले पद्मावतीं प्रती-
क्षिष्यावहे ।

विदूषकः—भो तह । [उपविश्योत्थाय] ही ही सरअकाळतिक्खो
भोस्तथा । ही ही शरत्कालतीक्ष्णो

दुस्सहो आदवो। ता इमं दाव माहवीमण्डवं पविसामो।

दुःसह आतपः। तद् इमं तावन्माधवीमण्डपं प्रविशावः।

राजा—बाढम्। गच्छाग्रतः।

विदूषकः—एव्वं होदु।

एवं भवतु। [उभौ परिक्रामतः]

पद्मावती—सव्वं आउळं कत्तुकामो अय्यवसन्तओ। किं दाणिं करेह्म।

सर्वम् आकुलं कर्तुकाम आर्यवसन्तकः। किम् इदानीं कुर्मः।

चेटी—भट्टिदारिए एदं महुअरपरिणिळीणं ओळंबळदं ओधूय

भर्तृदारिके एतां मधुकरपरिनिलीनाम् अवलम्बलताम् अवधूय

भट्टारं वारइस्सं।

भर्तारं वारयिष्यामि।

पद्मावती—एव्वं करेहि।

एवं कुरु। [चेटी तथा करोति]

विदूषकः—अविहा अविहा चिट्ठदु चिट्ठदु दाव भवं।

अविह अविह तिष्ठतु तिष्ठतु तावद् भवान्।

राजा—किमर्थम्।

विदूषकः—दासीएपुत्तेहि महुअरेहि पीडिदो ह्मि।

दास्याःपुत्रैर् मधुकरैः पीडितोऽस्मि।

राजा—मा मा भवानेवम्। मधुकरसन्त्रासः परिहार्यः। पश्य

मधुमदकला मधुकरा मदनार्ताभिः प्रियाभिरुपगूढाः।
पादन्यासविषण्णा वयमिव कान्तावियुक्ताः स्युः॥ ३॥

तस्मादिहैवासिष्यावहे।

विदूषकः—एव्वं होदु।

एवं भवतु। [उभावुपविशतः]

चेटी—भट्टिदारिए रुद्धा खु ह्म वयं।

भर्तृदारिके रुद्धाः खलु स्मो वयम्।

पद्मावती—दिट्ठिआ उवविट्ठो अय्यउत्तो ।
दिष्ट्या उपविष्ट आर्यपुत्रः ।

वासवदत्ता—[आत्मगतम्] दिट्ठिआ पकिदित्थसरीरो अय्यउत्तो ।
दिष्ट्या प्रकृतिस्थशरीर आर्यपुत्रः ।

चेटी—भट्टिदारिए सस्सुपादा खु अय्याए दिट्ठी ।
भर्तृदारिके साश्रुपाता खलु आर्याया दृष्टिः ।

वासवदत्ता—एसा खु महुअराणं अविणआदो कासकुसुमरेणुणा
एषा खलु मधुकराणाम् अविनयात् काशकुसुमरेणुना
पडिदेन सोदआ मे दिट्ठी ।
पतितेन सोदका मे दृष्टिः ।

पद्मावती—जुज्जइ ।
युज्यते ।

विदूषकः—भो सुण्णं खु इदं पमदवणं । पुच्छिदव्वं किञ्चि
भोः शून्यं खलु इदं प्रमदवनम् । प्रष्टव्यं किञ्चद्
अत्थि । पुच्छामि भवन्तं ।
अस्ति । पृच्छामि भवन्तम् ।

राजा—छन्दतः ।

विदूषकः—का भवदो पिआ तदाणिं तत्तहोदी वासवदत्ता
का भवतः प्रिया तदानीं तत्रभवती वासवदत्ता
इदाणिं पदुमावदी वा ।
इदानीं पद्मावती वा ।

राजा—किमिदानीं भवान् महति बहुमानसङ्कटे मां न्यस्यति ।

पद्मावती—हळा जादिसे सङ्कडे निक्खित्तो अय्यउत्तो ।
हळा यादृशे सङ्कटे निक्षिप्त आर्यपुत्रः ।

वासवदत्ता—[ आत्मगतम् ] अहं अ मन्दभाआ ।
अहं च मन्दभागा ।

विदूषकः—सेरं सेरं भणादु भवं । एका उवरदा अवरा
स्वैरं स्वैरं भणतु भवान् । एका उपरता अपरा

असण्णिहिदा ।

असन्निहिता ।

राजा—वयस्य न खलु न खलु ब्रूयाम् । भवांस्तु मुखरः ।

पद्मावती—एत्तएण भणिदं अय्यउत्तेन ।

एतावता भणितम् आर्यपुत्रेण ।

विदूषकः—भो सच्चेण सवामि कस्स वि ण आचक्खिस्सं ।

भोः सत्येन शपामि कस्मा अपि न आख्यास्ये ।

एसा सन्दट्टा मे जीहा ।

एषा सन्दष्टा मे जिह्वा ।

राजा—नोत्सहे सखे वक्तुम् ।

पद्मावती—अहो इमस्स पुरोभाइदा । एत्तिएण हिअअं ण जाणादि ।

अहो अस्य पुरोभागिता । एतावता हृदयं न जानाति ।

विदूषकः—किं ण भणादि मम । अणाचक्खिअ इमादो सिळा-

किं न भणति मम । अनाख्याय अस्माच् छिला-

वट्टआदो ण सक्कं एक्कपदं वि गमिदुं । एसो

पट्टकान् न शक्यम् एकपदम् अपि गन्तुम् । एष

रुद्धो अत्तभवं ।

रुद्धोऽत्रभवान् ।

राजा—किं बलात्कारेण ।

विदूषकः—आम बळक्कारेण ।

आम बलात्कारेण ।

राजा—तेन हि पश्यामस्तावत् ।

विदूषकः—पसीददु पसीददु भवं । वअस्सभावेण साविदो सि ।

प्रसीदतु प्रसीदतु भवान् । वयस्यभावेन शापितोऽसि ।

जइ सच्चं ण भणासि ।

यदि सत्यं न भणसि ।

राजा—का गतिः । श्रूयताम् ।

पद्मावती बहुमता मम यद्यपि रूपशीलमाधुर्यैः ।
वासवदत्ताबद्धं न तु तावन्मे मनो हरति ॥ ४ ॥

वासवदत्ता—[ आत्मगतम् ] भोदु भोदु । दिण्णं वेदणं इमस्स
भवतु भवतु । दत्त वेतनम् अस्य
परिखेदस्स । अहो अञ्ञादवासं पि एत्थ बहु-
परिखेदस्य । अहो अज्ञातवासो ऽप्य् अत्र बहु-
गुणं सम्पज्जइ ।
गुणः सम्पद्यते ।

चेटी—भट्टिदारिए अदक्खिञ्ञो खु भट्टा ।
भर्तृदारिके अदाक्षिण्यः खलु भर्ता ।

पद्मावती—हळा मा मा एव्वं । सदक्खिञ्ञो एव्व अय्यउत्तो ।
हळा मा मा एवम् । सदाक्षिण्य एव आर्यपुत्रः ।
जो इदाणिं वि अय्याए वासवदत्ताए गुणाणि
य इदानीम् अप्य् आर्याया वासवदत्ताया गुणान्
सुमरदि ।
स्मरति ।

वासवदत्ता—भद्दे अभिजणस्स सदिसं मन्तिदं ।
भद्रे अभिजनस्य सदृशं मन्त्रितम् ।

राजा—उक्तं मया । भवानिदानीं कथयतु । का भवतः प्रिया
तदा वासवदत्ता इदानीं पद्मावती वा ।

पद्मावती—अय्यउत्तो पि वसन्तओ संवुत्तो ।
आर्यपुत्रो ऽपि वसन्तकः संवृत्तः ।

विदूषकः—किं मे विप्पळविदेण । उभओ वि तत्तहोदीओ मे
किं मे विप्रलपितेन । उभे अपि तत्रभवत्यौ मे
बहुमदाओ ।
बहुमते ।

राजा—वैधेय मामेवं बलाच्छ्रुत्वा किमिदानीं नाभिभाषसे ।

विदूषकः—किं मं पि बळक्कारेण ।
किं माम् अपि बलात्कारेण ।

राजा—अथ किं बलात्कारेण ।

विदूषकः—तेण हि ण सक्कं सोदुं ।
तेन हि न शक्यं श्रोतुम् ।

राजा—प्रसीदतु प्रसीदतु महाब्राह्मणः । स्वैरं स्वैरमभिधीयताम् ।

विदूषकः—इदाणिं सुणादु भवं । तत्तहोदी वासवदत्ता मे बहु-
इदानीं शृणोतु भवान् । तत्रभवती वासवदत्ता मे बहु-
मदा । तत्तहोदी पदुमावदी तरुणी दस्सणीआ अको-
मता । तत्रभवती पद्मावती तरुणी दर्शनीया अको-
वणा अणहङ्कारा महुरवाआ सदक्खिञ्जा । अअं च
पना अनहङ्कारा मधुरवाक् सदाक्षिण्या । अयं च
अवरो महन्तो गुणो सिणिद्धेण भोअणेण मं पच्चु-
अपरो महान् गुणः स्निग्धेन भोजनेन मां प्रत्यु-
ग्गच्छइ वासवदत्ता कहिं णु खु गदो अय्य-
द्गच्छति वासवदत्ता कुत्र नु खलु गत आर्य-
वसन्तओ त्ति ।
वसन्तक इति ।

वासवदत्ता—भोदु भोदु वसन्तअ सुमरेहि दाणिं एदं ।
भवतु भवतु वसन्तक स्मर इदानीम् एताम् ।

राजा—भवतु भवतु वसन्तक सर्वमेतत् कथयिष्ये देव्यै वास-
वदत्तायै ।

विदूषकः—अविहा वासवदत्ता । कहिं वासवदत्ता । चिरा खु
अविहा वासवदत्ता । कुत्र वासवदत्ता । चिरात् खलु
उवरदा वासवदत्ता ।
उपरता वासवदत्ता ।

राजा—[ सविषादम् ] एवम् । उपरता वासवदत्ता ।

अनेन परिहासेन व्याक्षिप्तं मे मनस्त्वया ।
ततो वाणी तथैवेयं पूर्वाभ्यासेन निस्सृता ॥ ५ ॥

पद्मावती—रमणीओ खु कहाजोओ णिसंसेण विसंवादिओ ।
रमणीयः खलु कथायोगो नृशंसेन विसंवादितः ।

वासवदत्ता—[आत्मगतम्] भोदु भोदु विस्सत्थह्मि । अहो
भवतु भवतु विश्वस्तास्मि । अहो
पिअं णाम । ईदिसं वअणं अप्पच्चक्खं सुणीअदि ।
प्रियं नाम । ईदृशं वचनम् अप्रत्यक्षं श्रूयते ।

विदूषकः—धारेदु धारेदु भवं । अणदिक्कमणीओ हि विही ।
धारयतु धारयतु भवान् । अनतिक्रमणीयो हि विधिः ।
ईदिसं दाणिं एदं ।
ईदृशम् इदानीम् एतत् ।

राजा—वयस्य न जानाति भवानवस्थाम् । कुतः
दुःखं त्यक्तुं बद्धमूलोऽनुरागः
स्मृत्वा स्मृत्वा याति दुःखं नवत्वम् ।
यात्रा त्वेषा यद् विमुच्येह बाष्पं
प्राप्तानृण्या याति बुद्धिः प्रसादम् ॥ ६ ॥

विदूषकः—अस्सुपादकिळिण्णं खु तत्तहोदो मुहं । जाव
अश्रुपातक्लिन्नं खलु तत्रभवतो मुखम् । यावत्
मुहोदअं आणेमि । [निष्क्रान्तः]
मुखोदकम् आनयामि ।

पद्मावती—अय्ये बप्फाउळपडन्तरिदं अय्यउत्तस्स मुहं । जाव
आर्ये बाष्पाकुलपटान्तरितम् आर्यपुत्रस्य मुखम् । यावत्
णिक्कमह्म ।
निष्क्रामामः ।

वासवदत्ता—एव्वं होदु । अहव चिट्ठ तुवं । उक्कण्ठिदं भत्तारं
एवं भवतु । अथवा तिष्ठ त्वम् । उत्कण्ठितं भर्तारम्

उज्झिअ अजुत्तं णिग्गमणं । अहं एव्व गमिस्सं ।
उज्झित्व अयुक्तं निर्गमनम् । अहम् एव गमिष्यामि ।

चेटी—सुट्ठु अय्या भणादि । उवसप्पदु दाव भट्टिदारिआ ।
सुष्ठ्व् आर्या भणति । उपसर्पतु तावद् भर्तृदारिका ।

पद्मावती—किं णु खु पविसामि ।
किं नु खलु प्रविशामि ।

वासवदत्ता—हळा पविस । [ इत्युक्त्वा निष्क्रान्ता ]
हळा प्रविश ।

[ प्रविश्य ]

विदूषकः—[ नलिनीपत्रेण जलं गृहीत्वा ] एसा तत्तहोदी पदुमावदी ।
एषा तत्रभवती पद्मावती ।

पद्मावती—अय्य वसन्तअ किं एदं ।
आर्य वसन्तक किम् एतत् ।

विदूषकः—एदं इदं । इदं एदं ।
एतद् इदम् । इदम् एतत् ।

पद्मावती—भणादु भणादु अय्यो भणादु ।
भणतु भणत्व् आर्यो भणतु ।

विदूषकः—भोदि वादणीदेण कासकुसुमरेणुणा अक्खिणिपडिदेण
भवति वातनीतेन काशकुसुमरेणुना अक्षिनिपतितेन
सस्सुपादं खु तत्तहोदो मुहं । ता गह्णदु होदी इदं
साश्रुपातं खलु तत्रभवतो मुखम् । तद् गृह्णातु भवती इदम्
मुहोदअं ।
मुखोदकम् ।

पद्मावती—[ आत्मगतम् ] अहो सदक्खिञ्ञस्स जणस्स परिजणो
अहो सदाक्षिण्यस्य जनस्य परिजनो
वि सदक्खिञ्ञो एव्व होदी । [ उपेत्य ] जेदु अय्य-
ऽपि सदाक्षिण्य एव भवति । जयत्व् आर्य-

उत्तो । इदं मुहोदअं ।

पुत्रः । इदं मुखोदकम् ।

राजा—अये पद्मावती । [ अपवार्य ] वसन्तक किमिदम् ।

विदूषकः—[ कर्णे ] एव्वं विअ ।

एवम् इव ।

राजा—साधु वसन्तक साधु । [ आचम्य ] पद्मावती आस्यताम् ।

पद्मावती—जं अय्यउत्तो आणवेदि । [ उपविशति ]

यद् आर्यपुत्र आज्ञापयति ।

राजा—पद्मावति

शरच्छशाङ्कगौरेण वाताविद्धेन भामिनि ।
काशपुष्पलवेनेदं साश्रुपातं मुखं मम ॥ ७ ॥

[ आत्मगतम् ]

इयं बाला नवोद्वाहा सत्यं श्रुत्वा व्यथां व्रजेत् ।
कामं धीरस्वभावेयं स्त्रीस्वभावस्तु कातरः ॥ ८ ॥

विदूषकः—उइदं तत्तहोदो मअधराअस्स अवरह्णकाळे भवन्तं

उचितं तत्रभवतो मगधराजस्य अपराह्णकाले भवन्तम्

अग्गदो करिअ सुहिज्जणदंसणं । सक्कारो हि णाम

अग्रतः कृत्वा सुहृज्जनदर्शनम् । सत्कारो हि नाम

सक्कारेण पडिच्छिदो पीदिं उप्पादेदि । ता उट्ठेदु

सत्कारेण प्रतीष्टः प्रीतिम उत्पादयति । तद् उत्तिष्ठतु

दाव भवं ।

तावद् भवान् ।

राजा—बाढम् । प्रथमः कल्पः । उत्थाय ]

गुणाणां वा विशालानां सत्काराणां च नित्यशः ।
कर्तारः सुलभा लोके विज्ञातारस्तु दुर्लभाः ॥ ९ ॥

[ निष्क्रान्ताः सर्वे ]

चतुर्थोऽङ्कः ।

# अथ पञ्चमोऽङ्कः ।

[ ततः प्रविशति पद्मिनिका ]

पद्मिनिका—महुअरिए महुअरिए आअच्छ दाव सिग्घं ।
मधुकरिके मधुकरिके आगच्छ तावच्छीघ्रम् ।

[ प्रविश्य ]

मधुकरिका—हळा इअह्मि । किं करीअदु ।
हळा इयमस्मि । किं क्रियताम् ।

पद्मिनिका—हळा किं ण जाणासि तुवं भट्टिदारिआ पदुमावदी
हळा किं न जानासि त्वं भर्तृदारिका पद्मावती
सीसवेदणाए दुक्खाविदेत्ति ।
शीर्षवेदनया दुःखितेति ।

मधुकरिका—हद्धि ।
हा धिक् ।

पद्मिनिका—हळा गच्छ सिग्घं । अय्यं आवन्तिअं सद्दावेहि ।
हळा गच्छ शीघ्रम् । आर्याम् आवन्तिकां शब्दापय ।
केवलं भट्टिदारिआए सीसवेदणं एव्व णिवेदेहि ।
केवलं भर्तृदारिकायाः शीर्षवेदनाम् एव निवेदय ।
तदो सअं एव्व आगमिस्सदि ।
ततः स्वयम् एव आगमिष्यति ।

मधुकरिका—हळा किं सा करिस्सदि ।
हळा किं सा करिष्यति ।

पद्मिनिका—सा हु दाणिं महुराहि कहाहि भट्टिदारिआए
सा खल्व् इदानीं मधुराभिः कथाभिर् भर्तृदारिकायाः
सीसवेदणं विणोदेदि ।
शीर्षवेदनां विनोदयति ।

मधुकरिका—जुज्जइ । कहिं सअणीयं रइदं भट्टिदारिआए ।
युज्यते । कुत्र शयनीयं रचितं भर्तृदारिकायाः ।

पद्मिनिका—समुद्दगिहके किल सेज्जात्थिण्णा। गच्छ दाणिं तुवं।
समुद्रगृहके किल शय्यास्तीर्णा। गच्छ इदानीं त्वम्।
अहं वि भट्टिणो णिवेदणत्थं अय्यवसन्तअं अण्णेसामि।
अहम् अपि भर्त्रे निवेदनार्थम् आर्यवसन्तकम् अन्विष्यामि

मधुकरिका—एव्वं होदु। [निष्क्रान्ता]
एवं भवतु।

पद्मिनिका—कहिं दाणिं अय्यवसन्तअं पेक्खामि।
कुत्र इदानीम् आर्यवसन्तकं पश्यामि।
[ ततः प्रविशति विदूषकः ]

विदूषकः—अज्ज खु देवीविओअविहुरहिअअस्स तत्तहोदो
अद्य खलु देवीवियोगविधुरहृदयस्य तत्रभवतो
वच्छराअस्स पदुमावदीपाणिग्गहणसमीरिअस्स
वत्सराजस्य पद्मावतीपाणिग्रहणसमीरितस्य
अच्चन्तसुहावहे मङ्गळोसवे मदणग्गिदाहो अहिअदरं
अत्यन्तसुखावहे मङ्गलोत्सवे मदनाग्निदाहो ऽधिकतरं
वड्ढइ। [ पद्मिनिकां विलोक्य ] अयि पदुमिणिआ।
वर्धते अयि पद्मिनिका।
पदुमिणिए किं इह वत्तदि।
पद्मिनिके किम् इह वर्तते।

पद्मिनिका—अय्य वसन्तअ किं ण जाणासि तुवं भट्टिदारिआ
आर्य वसन्तक किं न जानासि त्वं भर्तृदारिका
पदुमावदी सीसवेदणाए दुक्खाविदेत्ति।
पद्मावती शीर्षवेदनया दुःखितेति।

विदूषकः—भोदि सच्चं ण जाणामि।
भवति सत्यं न जानामि।

पद्मिनिका—तेण हि भट्टिणो णिवेदेहि णं। जाव अहं वि
तेन हि भर्त्रे निवेदय एनाम्। यावद् अहम् अपि

सीसाणुळेवणं तुवारेमि ।

शीर्षानुलेपनं त्वरयामि ।

विदूषकः—कहिं सअणीअं रइदं पदुमावदीए ।

कुत्र शयनीयं रचितं पद्मावत्याः ।

पद्मिनिका—समुद्दगिहके किळ सेज्जात्थिण्णा ।

समुद्रगृहके किल शय्यास्तीर्णा ।

विदूषकः—गच्छदु भोदी । जाव अहं वि तत्तहोदो णिवेदइस्सं ।

गच्छतु भवती ।यावद् अहम् अपि तत्रभवते निवेदयिष्यामि ।

[ निष्क्रान्तौ ]

## प्रवेशकः

[ ततः प्रविशति राजा ]

राजा—श्लाघ्यामवन्तिनृपतेः सदृशीं तनूजां
कालक्रमेण पुनरागतदारभारः ।
लावाणके हुतवहेन हृताङ्गयष्टिं
तां पद्मिनीं हिमहतामिव चिन्तयामि ॥ १ ॥

[ प्रविश्य ]

विदूषकः—तुवरदु तुवरदु दाव भवं ।

त्वरतां त्वरतां तावद् भवान् ।

राजा—किमर्थम् ।

विदूषकः—तत्रहोदी पदुमावदी सीसवेदणाए दुक्खाविदा ।

तत्रभवती पद्मावती शीर्षवेदनया दुःखिता ।

राजा—कैवमाह ।

विदूषकः—पदुमिणिआए कहिदं ।

पद्मिनिकया कथितम् ।

राजा—भोः कष्टं
रूपश्रिया समुदितां गुणतश्च युक्तां
लब्ध्वा प्रियां मम तु मन्द इवाद्य शोकः ।

पूर्वाभिघातसरुजोऽप्यनुभूतदुःख:
पद्मावतीमपि तथैव समर्थयामि ॥ २ ॥

अथ कस्मिन् प्रदेशे वर्तते पद्मावती ।

विदूषकः—समुद्दगिहके किळ सेज्जात्थिण्णा ।
समुद्रगृहके किल शय्यास्तीर्णा ।

राजा—तेन हि तस्य मार्गमादेशय ।

विदूषकः—एदु एदु भवं [ उभौ परिक्रामतः ]
एत्व् एतु भवान् ।

विदूषकः—इदं समुद्दगिहकं । पविसदु भवं ।
इदं समुद्रगृहकम् । प्रविशतु भवान् ।

राजा—पूर्वं प्रविश ।

विदूषकः—भो तह । [ प्रविश्य ] अविहा चिट्ठदु चिट्ठदु दाव भवं ।
भोः तथा । अविहा तिष्ठतु तिष्ठतु तावद् भवान् ।

राजा—किमर्थम् ।

विदूषकः—एसो खु दीवप्पभावसूइदरूवो वसुधातळे परिवत्तमाणो-
एष खलु दीपप्रभावसूचितरूपो वसुधातले परिवर्तमानो
अअं काओदरो ।
ऽयं काकोदरः ।

राजा–[ प्रविश्यावलोक्य । सस्मितम् ] अहो सर्पव्यक्ति वैधेयस्य ।

ऋज्वायतां हि मुखतोरणलोलमालां
भ्रष्टां क्षितौ त्वमवगच्छसि मूर्ख सर्पम् ।
मन्दानिलेन निशि या परिवर्तमाना
किञ्चित् करोति भुजगस्य विचेष्टितानि ॥ ३ ॥

विदूषकः–[ निरूप्य ] सुट्ठु भवं भणादि । ण हु अअं काओदरो ।
सुष्ठु भवान् भणति । न खल्व् अयं काकोदरः ।

[ प्रविश्यावलोक्य ] तत्तहोदी पदुमावदी इह आअच्छिअ णिग्गदा
तत्रभवती पद्मावती इह आगत्य निर्गता

भवे ।

भवेत् ।

राजा—वयस्य अनागतया भवितव्यम् ।

विदूषकः—कहं भवं जाणादि ।

कथं भवान् जानाति ।

राजा—किमत्र ज्ञेयम् । पश्य

शय्या नावनता तथास्ततसमा न व्याकुलप्रच्छदा

न क्लिष्टं हि शिरोपधानममलं शीर्षाभिघातौषधैः ।

रोगे दृष्टिविलोभनं जनयितुं शोभा न काचित् कृता

प्राणी प्राप्य रुजा पुनर्न शयनं शीघ्रं स्वयं मुञ्चति ॥४॥

विदूषकः—तेण हि इमस्सिं सय्याए मुहुत्तअं उवविसिअ तत्त-

तेन ह्य अस्यां शय्यायां मुहूर्तकम् उपविश्य तत्र-

होदिं पडिवाळेदु भवं ।

भवतीं प्रतिपालयतु भवान् ।

राजा—बाढम् । [ उपविश्य ] वयस्य निद्रा मां बाधते । कथ्यतां काचित् कथा ।

विदूषकः—अहं कहइस्सं । हों त्ति करेदु अत्तभवं ।

अहं कथयिष्यामि । हों इति करोत्व् अत्रभवान् ।

राजा—बाढम् ।

विदूषकः—अत्थि णअरी उज्जइणी णाम । तहिं अहिअरमणी-

अस्ति नगर्य् उज्जयिनी नाम । तत्र अधिकरमणी-

आणि उदअह्णाणाणि वत्तन्ति किळ ।

यान्य् उदकस्नानानि वर्तन्ते किल ।

राजा—कथमुज्जयिनी नाम ।

विदूषकः—जइ अणभिप्पेदा एसा कहा अण्णं कहइस्सं ।

यद्य् अनभिप्रेता एषा कथा अन्यां कथयिष्यामि ।

राजा—वयस्य न खलु नाभिप्रेतैषा कथा । किन्तु

स्मराम्यवन्त्याधिपतेः सुतायाः
प्रस्थानकाले स्वजनं स्मरन्त्याः ।
बाष्पं प्रवृत्तं नयनान्तलग्नं
स्नेहान्ममैवोरसि पातयन्त्याः ॥ ५ ॥

अपि च

बहुशोऽप्युपदेशेषु यया मामीक्षमाणया ।
हस्तेन स्रस्तकोणेन कृतमाकाशवादितम् ॥ ६ ॥

विदूषकः—भोदु अण्णं कहइस्सं । अत्थि णअरं बह्मदत्तं
भवतु अन्यां कथयिष्यामि। अस्ति नगरं ब्रह्मदत्तं
णाम । तहिं किळ राआ कंपिळ्ळो णाम ।
नाम। तत्र किल राजा काम्पिल्यो नाम।

राजा—किमिति किमिति ।

विदूषकः—[ पुनस्तदेव पठति ]

राजा—मूर्ख राजा ब्रह्मदत्तो नगरं काम्पिल्यमित्यभिधीयताम् ।

विदूषकः—किं राआ बह्मदत्तो णअरं कंपिळ्ळं ।
किं राजा ब्रह्मदत्तो नगरं काम्पिल्यम्।

राजा—एवमेतत् ।

विदूषकः—तेण हि मुहुत्तअं पडिवाळेदु भवं । जाव ओट्ठगअं
तेन हि मुहूर्तकं प्रतिपालयतु भवान्। यावद् ओष्ठगतं
करिस्सं । राआ बह्मदत्तो णअरं कंपिळ्ळं । [ इति
करिष्यामि। राजा ब्रह्मदत्तो नगरं काम्पिल्यम्।
बहुशस्तदेव पठति ] दाणिं सुणादु भवं । अयि सुत्तो अत्तभवं ।
इदानीं शृणोतु भवान्। अयि सुप्तोऽत्रभवान्।
अदिसीदळा इअं वेळा । अत्तणो पावरअं गह्णिअ
अतिशीतला इयं वेला। आत्मनः प्रावारकं गृहीत्वा
आअमिस्सं । [ निष्क्रान्तः ]
आगमिष्यामि।

[ ततः प्रविशति वासवदत्ता आवन्तिकावेषेण चेटी च ]

चेटी—एदु एदु अय्या। दिढं खु भट्टिदारिआ सीसवेदणाए
एत्वेत्व् आर्या। दृढं खलु भर्तृदारिका शीर्षवेदनया
दुक्खाविदा।
दुःखिता ।

वासवदत्ता—हद्धि कहिं सअणीअं रइदं पदुमावदीए।
हाधिक् कुत्र शयनीयं रचितं पद्मावत्याः।

चेटी—समुद्दगिहके किळ सेज्जात्थिण्णा।
समुद्रगृहके किल शय्यास्तीर्णा ।

वासवदत्ता—तेण हि अग्गदो याहि।
तेन ह्य् अग्रतो याहि। [ उभे परिक्रामतः ]

चेटी—इदं समुद्दगिहकं। पविसदु अय्या । जाव अहं वि
इदं समुद्रगृहकम्। प्रविशत्व् आर्या । यावद् अहम् अपि
सीसाणुळेवणं तुवारेमि। [ निष्क्रान्ता ]
शीर्षानुलेपनं त्वरयामि।

वासवदत्ता—अहो अकरुणा खु इस्सरा मे। विरहपय्युस्सुअस्स
अहो अकरुणाः खल्व् ईश्वरा मे। विरहपर्युत्सुकस्य
अय्यउत्तस्स विस्समत्थाणभूदा इअं पि णाम पदुमा-
आर्यपुत्रस्य विश्रमस्थानभूता इयमपि नाम पद्मा-
वदी अस्सत्था जादा। जाव पविसामि।
वत्य् अस्वस्था जाता। यावत् प्रविशामि।
[ प्रविश्यावलोक्य ] अहो परिजणस्स पमादो। अस्सत्थं पदुमा-
अहो परिजनस्य प्रमादः। अस्वस्थां पद्मा-
वदिं केवळं दीवसहाअं करिअ परित्तजदि। इअं
वतीं केवलं दीपसहायां कृत्वा परित्यजति। इयं
पदुमावदी ओसुत्ता। जाव उवविसामि। अहवा
पद्मावत्य् अवसुप्ता। यावद् उपविशामि। अथवा
अन्नासणपरिग्गहेण अप्पो विअ सिणेहो पडि-
अन्यासनपरिग्रहेण अल्प इव स्नेहः प्रति-

The gods. [shows that she believed in many gods.]

भादि। ता इमस्सिं सय्याए उवविसामि। [उपविश्य]
भाति। तद् अस्यां शय्यायाम् उपविशामि।
किं णु हु एदाए सह उववि सन्तीए अज्ज पह्ळा-
किं नु खल्व् एतया सह उपविशन्त्या अद्य प्रह्ला-
दिदं विअ मे हिअअं। दिट्ठिआ अविच्छिण्णसुह-
दितमिव मे हृदयम्। दिष्ट्या अविच्छिन्नसुख-
णिस्सासा। णिव्वुत्तरोआए होदव्वं। अहव एअ-
निःश्वासा। निवृत्तरोगया भवितव्यम्। अथवा एक·
देससंविभाअदाए सअणीअस्स सूएदि मं आ-
देशसंविभागतया शयनीयस्य सूचयति माम् आ-
ळिङ्गेहि त्ति। जाव सइस्सं। [ शयनं नाटयति ]
लिङ्ग इति। यावच् छयिष्ये।

राजा—[ स्वप्नायते ] हा वासवदत्ते।

वासवदत्ता—[ सहसोत्थाय ] हं अय्यउत्तो। ण हु पदुमावदी।
हम् आर्यपुत्रः। न खलु पद्मावती।
किं णु खु दिट्ठह्मि। महन्तो खु अय्यजो-
किं नु खलु दृष्टास्मि। महान् खल्व् आर्ययौ-
अन्धराअणस्स पडिण्णाहारो मम दंसणेण णिप्फळो
गन्धरायणस्य प्रतिज्ञाभारो मम दर्शनेन निष्फलः
संवुत्तो।
संवृत्तः।

राजा—हा अवन्तिराजपुत्रि।

वासवदत्ता—दिट्ठिआ सिविणाअदि खु अय्यउत्तो। ण एत्थ
दिष्ट्या स्वप्नायते खल्व् आर्यपुत्रः। न अत्र
कोच्चि जणो। जाव मुहुत्तअं चिट्ठिअ दिट्ठिं हिअअं
कश्चिज् जनः। यावन्मुहूर्तकं स्थित्वा दृष्टिं हृदयं
च तोसेमि।
च तोषयामि।

राजा—हा प्रिये । हा प्रियशिष्ये । देहि मे प्रतिवचनम् ।

वासवदत्ता—आळवामि भट्टा आळवामि ।
आलपामि भर्तः आलपामि ।

राजा—किं कुपितासि ।

वासवदत्ता—ण हि ण हि दुक्खिदह्मि ।
न हि न हि दुःखितास्मि ।

राजा—यद्यकुपिता किमर्थं नालङ्कृतासि ।

वासवदत्ता—इदो वरं किं ।
इतः वरं किम् ।

राजा—किं विरचिकां स्मरसि ।

वासवदत्ता—[ सरोषम् ] आ अवेहि । इहावि विरचिआ ।
आ अपेहि । इहापि विरचिका ।

राजा—तेन हि विरचिकार्थं भवतीं प्रसादयामि । [हस्तौ प्रसारयति]

वासवदत्ता—चिरं ठिदह्मि । को वि मं पेक्खे । ता गमिस्सं ।
चिरं स्थितास्मि । कोऽपि मां पश्येत् । तद् गमिष्यामि ।
अहव सय्यापलम्बिअं अय्यउत्तस्स हत्थं सअणीए
अथवा शय्याप्रलम्बितम् आर्यपुत्रस्य हस्तं शयनीय
आरोविअ गमिस्सं । [ तथा कृत्वा निष्क्रान्ता ]
आरोप्य गमिष्यामि ।

राजा—[ सहसोत्थाय ] वासवदत्ते तिष्ठ तिष्ठ । हा धिक् ।
निष्क्रामन् सम्भ्रमेणाहं द्वारपक्षेण ताडितः ।
ततो व्यक्तं न जानामि भूतार्थोऽयं मनोरथः ॥७॥

[ प्रविश्य ]

विदूषकः—अइ पडिबुद्धो अत्तभवं ।
अयि प्रतिबुद्धो ऽत्रभवान् ।

राजा—वयस्य प्रियमावेदये । धरते खलु वासवदत्ता ।

विदूषकः—अविहा वासवदत्ता । कहिं वासवदत्ता । चिरा खु
अविहा वासवदत्ता । कुत्र वासवदत्ता । चिरात् खलु
उवरदा वासवदत्ता ।
उपरता वासवदत्ता ।

राजा—वयस्य मा मैवम् ।

शय्यायामवसुप्तं मां बोधयित्वा सखे गता ।
दग्धेति ब्रुवता पूर्वं वञ्चितोऽस्मि रुमण्वता ॥ ८ ॥

विदूषकः—अविहा असम्भावणीअं एदं ण । आ उदअह्णाण-
अविहा असम्भावनीयम् एतद् न । आ उदकस्नान-
सङ्कित्तणेण तत्तहोदिं चिन्तअन्तेण सा सिविणे दिट्ठा
सङ्कीर्तनेन तत्रभवतीं चिन्तयता सा स्वप्ने दृष्टा
भवे ।
भवेत् ।

राजा—एवम् । मया स्वप्नो दृष्टः ।

यदि तावदयं स्वप्नो धन्यमप्रतिबोधनम् ।
अथायं विभ्रमो वा स्याद् विभ्रमो ह्यस्तु मे चिरम् ॥ ९ ॥

विदूषकः—भो वअस्स एदस्सिं णअरे अवन्तिसुन्दरी णाम
भोः वयस्य एतस्मिन् नगरे ऽवन्तिसुन्दरी नाम
जक्खिणी पडिवसदि । सा तुए दिट्ठा भवे ।
यक्षिणी प्रतिवसति । सा त्वया दृष्टा भवेत् ।

राजा—न न

स्वप्नस्यान्ते विबुद्धेन नेत्रविप्रोषिताञ्जनम् ।
चारित्रमपि रक्षन्त्या दृष्टं दीर्घालकं मुखम् ॥ १० ॥

अपि च वयस्य पश्य पश्य

योऽयं सन्त्रस्तया देव्या तया बाहुर्निपीडितः ।
स्वप्नेऽप्युत्पन्नसंस्पर्शो रोमहर्षं न मुञ्चति ॥ ११ ॥

विदूषकः—मा दाणिं भवं अणत्थं चिन्तिअ । एदु एदु
मा इदानीं भवान् अनर्थं चिन्तयित्वा । एतु एतु
भवं । चउस्साळं पविसामो ।
भवान् । चतुःशालं प्रविशावः । [ प्रविश्य ]

काञ्चुकीयः—जयत्वार्यपुत्रः । अस्माकं महाराजो दर्शको भवन्तमाह । एष खलु भवतोऽमात्यो रुमण्वान् महता बलसमुदयेनोपयातः खल्वारुणिमभिघातयितुम् । तथा हस्त्यश्वरथपदातीनि मामकानि विजयाङ्गानि सन्नद्धानि । तदुत्तिष्ठतु भवान् । अपि च

भिन्नास्ते रिपवो भवद्गुणरताः पौराः समाश्वासिताः
पार्ष्णी यापि भवत्प्रयाणसमये तस्या विधानं कृतम् ।
यद्यत् साध्यमरिप्रमाथजननं तत्तन्मयानुष्ठितं
तीर्णा चापि बलैर्नदी त्रिपथगा वत्साश्च हस्ते तव ॥१२॥

राजा—[ उत्थाय ] बाढम् । अयमिदानीम् ।

उपेत्य नागेन्द्रतुरङ्गतीर्णे तमारुणिं दारुणकर्मदक्षम् ।
विकीर्णबाणोग्रतरङ्गभङ्गे महार्णवाभे युधि नाशयामि ॥१३॥

[ निष्क्रान्ताः सर्वे ]

## पञ्चमोऽङ्कः

## अथ षष्ठोऽङ्कः ।

[ ततः प्रविशति काञ्चुकीयः ]

काञ्चुकीयः—क इह भोः काञ्चनतोरणद्वारमशून्यं कुरुते ।

[ प्रविश्य ]

प्रतीहारी—अय्य अहं विजआ । किं करीअदु ।
आर्य अहं विजया । किं क्रियताम् ।

काञ्चुकीयः—भवति निवेद्यतां निवेद्यतां वत्सराज्यलाभप्रवृद्धोदयायोदयनाय । एष खलु महासेनस्य सकाशाद् रैभ्यसगोत्रः काञ्चुकीयः प्राप्तः । तत्रभवत्या चाङ्गारवत्या प्रेषितार्या वसुन्धरा नाम वासवदत्ताधात्री च प्रतीहारमुपस्थिताविति ।

प्रतीहारी—अय्य अदेसकाळो पडीहारस्स ।
आर्य अदेशकालः प्रतीहारस्य ।

काञ्चुकीयः—कथमदेशकालो नाम ।

प्रतीहारी—सुणादु अय्यो । अज्ज भट्टिणो सुय्यामुहप्पासाद-
श्रृणोत्व् आर्यः । अद्य भर्तुः सूर्यामुखप्रासाद-
गदेण केणवि वीणा वादिदा । तं च सुणिअ भट्टिणा
गतेन केनापि वीणा वादिता । तं च श्रुत्वा भर्त्रा
भणिअं घोसवदीए सद्दो विअ सुणीआदि त्ति ।
भणितं घोषवत्याः शब्द इव श्रूयत इति ।

काञ्चुकीयः—ततस्ततः ।

प्रतीहारी—तदो तहिं गच्छिअ पुच्छिदो । कुदो इमाए वीणाए
ततस् तत्र गत्वा पृष्टः । कुतोऽस्या वीणाया
आगमो त्ति । तेण भणिअं । अह्मेहिं णम्मदातीरे
आगम इति । तेन भणितम् । अस्माभिर नर्मदातीरे

कुच्चगुम्मळग्गा दिट्ठा । जइ प्पओअणं इमाए उवणी-
कूर्चगुल्मलग्ना दृष्टा । यदि प्रयोजनम् अनया उपनी-
अदु भट्टिणोत्ति । तं च उवणीदं अङ्के करिअ मोहं
यतां भर्त्र इति । तां च उपनीताम् अङ्के कृत्वा मोहं
गदो भट्टा । तदो मोहप्पच्चागदेण बप्फपय्याउळेण
गतो भर्ता । ततो मोहप्रत्यागतेन बाष्पपर्याकुलेन
मुहेण भट्टिणा भणिअं । दिट्ठासि घोसवदि । सा
मुखेन भर्त्रा भणितम् । दृष्टासि घोषवति । सा
खु ण दिस्सदि त्ति । अय्य ईदिसो अणवसरो ।
खलु न दृश्यत इति । आर्य ईदृशो ऽनवसरः ।
कहं णिवेदेमि ।
कथं निवेदयामि ।

काञ्चुकीयः—भवति निवेद्यताम् । इदमपि तदाश्रयमेव ।

प्रतीहारी—अय्य इअं णिवेदेमि । एषो भट्टा सुय्यामुहप्पासा-
आर्य इयं निवेदयामि । एष भर्ता सूर्यामुखप्रासा-
दादो ओदरइ । ता इह एव्व णिवेदइस्सं ।
दाद् अवतरति । तद् इह एव निवेदयिष्यामि ।

काञ्चुकीयः—भवति तथा । [ उभौ निष्क्रान्तौ ]

## मिश्रविष्कम्भकः ।

[ ततः प्रविशति राजा विदूषकश्च । ]

राजा—श्रुतिसुखनिनदे कथं नु देव्याः

स्तनयुगले जघनस्थले च सुप्ता ।
विहगगणरजोविकीर्णदण्डा
प्रतिभयमध्युषितास्यरण्यवासम् ॥ १ ॥

अपि च, अस्निग्धासि घोषवति या तपस्विन्या न स्मरसि
श्रोणीसमुद्वहनपार्श्वनिपीडितानि

Vidya Sagar



खेदस्तनान्तरसुखान्युपगूहितानि ।
उद्दिश्य मां च विरहे परिदेवितानि
वाद्यान्तरेषु कथितानि च सस्मितानि ॥ २ ॥

विदूषकः—अळं दाणिं भवं अदिमत्तं सन्तप्पिअ ।
अलम् इदानीं भवान् अतिमात्रं सन्तप्य ।

राजा—वयस्य मा मैवम् ।
चिरप्रसुप्तः कामो मे वीणया प्रतिबोधितः ।
तां तु देवीं न पश्यामि यस्या घोषवती प्रिया ॥ ३ ॥

वसन्तक शिल्पिजनसकाशान्नवयोगां घोषवतीं कृत्वा शीघ्रमानय ।

विदूषकः—जं भवं आणवेदि । [ वीणां गृहीत्वा निष्क्रान्तः ]
यद् भवान् आज्ञापयति ।

[ प्रविश्य ]

प्रतीहारी—जेदु भट्टा । एसो खु महासेणस्स सआसादो
जयतु भर्ता । एष खलु महासेनस्य सकाशाद्
रब्भसगोत्तो कञ्चुईओ देवीए अङ्गारवदीए पेसिदा
रैभ्यसगोत्रः काञ्चुकीयो देव्या अङ्गारवत्या प्रेषिता
अय्या वसुन्धरा णाम वासवदत्ताधत्ती अ पडिहारं
आर्या वसुन्धरा नाम वासवदत्ताधात्री च प्रतिहारम्
उवट्टिदा ।
उपस्थितौ ।

राजा—तेन हि पद्मावती तावदाहूयताम् ।

प्रतीहारी—जं भट्टा आणवेदि । [ निष्क्रान्ता ]
यद् भर्ता आज्ञापयति ।

राजा—किं नु खलु शीघ्रमिदानीमियं वृत्तान्तो महासेनेन विदितः ।

[ ततः प्रविशति पद्मावती प्रतीहारी च ]

प्रतीहारी—एदु एदु भट्टिदारिआ ।
एतु एतु भर्तृदारिका ।

पद्मावती—जेदु अय्यउत्तो ।

जयतु आर्यपुत्रः ।

राजा—पद्मावति किं श्रुतं महासेनस्य सकाशाद् रैभ्यसगोत्रः काञ्चुकीयः प्राप्तस्तत्रभवत्या चाङ्गारवत्या प्रेषितार्या वसुन्धरा नाम वासवदत्ताधात्री च प्रतिहारमुपस्थिताविति ।

पद्मावती—अय्यउत्त पिअं मे ञादिकुलस्स कुसलवुत्तन्तं सोदुं ।

आर्यपुत्र प्रियं मे ज्ञातिकुलस्य कुशलवृत्तान्तं श्रोतुम् ।

राजा—अनुरूपमेतद् भवत्याभिहितम् । वासवदत्तास्वजनो मे स्वजन इति । पद्मावति आस्यताम् । किमिदानीं नास्यते ।

पद्मावती—अय्यउत्त किं मए सह उवविट्ठो एदं जणं पेक्खिस्सदि ।

आर्यपुत्र किं मया सह उपविष्ट एतं जनं प्रेक्षिष्यते ।

राजा—कोऽत्र दोषः ।

पद्मावती—अय्यउत्तस्स अवरो परिग्गहो त्ति उदासीणं विअ होदि ।

आर्यपुत्रस्य अपरः परिग्रह इत्य् उदासीनम् इव भवति ।

राजा—कलत्रदर्शनार्हं जनं कलत्रदर्शनात् परिहरतीति बहुदोषमुत्पादयति । तस्मादास्यताम् ।

पद्मावती—जं अय्यउत्तो आणवेदि । [ उपविश्य ] अय्यउत्त

यद् आर्यपुत्र आज्ञापयति । आर्यपुत्र

तादो वा अम्बा वा किं णु खु भणिस्सदि त्ति

तातो वा अम्बा वा किं नु खलु भणिष्यति इत्य्

आविग्गा विअ संवुत्ता ।

आविग्ना इव संवृत्ता ।

राजा—पद्मावति एवमेतत् ।

किं वक्ष्यतीति हृदयं परिशङ्कितं मे

कन्या मयाप्यपहृता न च रक्षिता सा ।

भाग्यैश्चलैर्महदवाप्तगुणोपघातः

पुत्रः पितुर्जनितरोष इवास्मि भीतः ॥ ४ ॥

पद्मावती—ण किं सक्कं रक्खिदुं पत्तकाले।
न किं शक्यं रक्षितुं प्राप्तकाले।

प्रतीहारी—एसो कञ्चुईओ धत्ती अ पडिहारं उवट्ठिदा।
एष काञ्चुकीयो धात्री च प्रतिहारम् उपस्थितौ।

राजा—शीघ्रं प्रवेश्यताम्।

प्रतीहारी—जं भट्टा आणवेदि। [ निष्क्रान्ता ]
यद् भर्ता आज्ञापयति।

[ ततः प्रविशति काञ्चुकीयो धात्री प्रतीहारी च ]

काञ्चुकीयः—भोः

सम्बन्धिराज्यमिदमेत्य महान् प्रहर्षः
स्मृत्वा पुनर्नृपसुतानिधनं विषादः।
किं नाम दैव भवता न कृतं यदि स्याद्
राज्यं परैरपहृतं कुशलं च देव्याः॥ ५॥

प्रतीहारी—एसो भट्टा। उवसप्पदु अय्यो।
एष भर्ता। उपसर्पत्व आर्यः।

काञ्चुकीयः—[ उपेत्य ] जयत्वार्यपुत्रः।

धात्री—जेदु भट्टा।
जयतु भर्ता।

राजा—[ सबहुमानम् ] आर्य

पृथिव्यां राजवंश्यानामुदयास्तमयप्रभुः।
अपि राजा स कुशली मया कांक्षितबान्धवः॥ ६॥

काञ्चुकीयः—अथ किम्। कुशली महासेनः। इहापि सर्वगतं कुशलं पृच्छति।

राजा—[ आसनादुत्थाय ] किमाज्ञापयति महासेनः।

काञ्चुकीयः—सदृशमेतद् वैदेहीपुत्रस्य। नन्वासनस्थेनैव भवता श्रोतव्यो महासेनस्य सन्देशः।

राजा—यदाज्ञापयति महासेनः । [ उपविशति ]

काञ्चुकीयः—दिष्टया परैरपहृतं राज्यं पुनः प्रत्यानीतमिति । कुतः

कातरा ये ऽप्यशक्ता वा नोत्साहस्तेषु जायते ।
प्रायेण हि नरेन्द्रश्रीः सोत्साहैरेव भुज्यते ॥ ७ ॥

राजा—आर्य सर्वमेतन्महासेनस्य प्रभावः । कुतः

अहमवजितः पूर्वं तावत् सुतैः सह लालितो
दृढमपहृता कन्या भूयो मया न च रक्षिता ।
निधनमपि च श्रुत्वा तस्यास्तथैव मयि स्वता
ननु यदुचितान् वत्सान् प्राप्तुं नृपोऽत्र हि कारणम् ॥८॥

काञ्चुकीयः—एष महासेनस्य सन्देशः । देव्याः सन्देशमिहात्रभवती कथयिष्यति ।

राजा—हा अम्ब

षोडशान्तःपुरज्येष्ठा पुण्या नगरदेवता ।
मम प्रवासदुःखार्ता माता कुशलिनी ननु ॥ ९ ॥

धात्री—अरोआ भट्टिणी । भट्टारं सव्वगदं कुसलं पुच्छादि ।

अरोगा भट्टिनी । भर्तारं सर्वगतं कुशलं पृच्छति ।

राजा—सर्वगतं कुशलमिति । अम्ब ईदृशं कुशलम् ।

धात्री—मा दाणिं भट्टा अदिमत्तं सन्तप्पिदुं ।

मा इदानीं भर्ता अतिमात्रं सन्तप्तुम् ।

काञ्चुकीयः—धारयत्वार्यपुत्रः । उपरताप्यनुपरता महासेनपुत्री एवमनुकम्प्यमानार्यपुत्रेण । अथवा

कः कं शक्तो रक्षितुं मृत्युकाले रज्जुच्छेदे के घटं धारयन्ति ।
एवं लोकस्तुल्यधर्मो वनानां काले काले छिद्यते रुह्यते च ॥१०॥

राजा—आर्य मा मैवम्

महासेनस्य दुहिता शिष्या देवी च मे प्रिया ।
कथं सा न मया शक्या स्मर्तुं देहान्तरेष्वपि ॥ ११ ॥

धात्री—आह भट्टिणी । उवरदा वासवदत्ता । मम वा महासेणस्स
आह भट्टिनी । उपरता वासवदत्ता । मम वा महासेनस्य
वा जादिसा गोवाळअपाळआ तादिसो एव्व तुमं पुढमं
वा यादृशौ गोपालकपालकौ तादृश एव त्वं प्रथमम्
एव्व अभिप्पेदो जामादुअत्ति । एदण्णिमित्तं उज्जइणिं
एव अभिप्रेतो जामातेति । एतन्निमित्तम् उज्जयिनीम्
आणीदो । अणग्गिसक्खिअं वीणावव्वदेसेण दिण्णा ।
आनीतः । अनग्निसाक्षिकं वीणाव्यपदेशेन दत्ता ।
अत्तणो चवळदाए अणिव्वुत्तविवाहमङ्गळो एव्व गदो ।
आत्मनश् चपलतया अनिर्वृत्तविवाहमङ्गल एव गतः ।
अह अ अह्मेहिं तव अ वासवदत्ताए अ पडिकिदिं चित्त-
अथ च आवाभ्यां तव च वासवदत्तायाश् च प्रतिकृतिं चित्र-
फळआए आळिहिअ विवाहो णिव्वुत्तो । एसा चित्त-
फलकायाम् आलिख्य विवाहो निर्वृत्तः । एषा चित्र-
फळआ तव सआसं पेसिदा । एदं पेक्खिअ णिव्वुदो
फलका तव सकाशं प्रेषिता । एतां दृष्ट्वा निर्वृतो
होहि ।
भव ।

राजा—अहो अतिस्निग्धमनुरूपं चाभिहितं तत्रभवत्या ।

वाक्यमेतत् प्रियतरं राज्यलाभशतादपि ।
अपराद्धेष्वपि स्नेहो यदस्मासु न विस्मृतः ॥१२॥

पद्मावती—अय्यउत्त चित्तगदं गुरुअणं पेक्खिअ अभिवादेदुं
आर्यपुत्र चित्रगतं गुरुजनं दृष्ट्वा अभिवादयितुम्
इच्छामि ।
इच्छामि ।

धात्री—पेक्खदु पेक्खदु भट्टिदारिआ । [ चित्रफलकां दर्शयति ]


पश्यतु पश्यतु भर्तृदारिका ।

पद्मावती–[ दृष्ट्वा आत्मगतम् ] हं अदिसादिसी खु इअं अय्याए
हम् अतिसदृशी खलु इयम् आर्याया
आवन्तिआए । [ प्रकाशम ] अय्यउत्त सादिसी खु
आवन्तिकायाः । आर्यपुत्र सदृशी खलु
इअं अय्याए ।
इयम् आर्यायाः ।

राजा—न सदृशी । सैवेति मन्ये । भोः कष्टम्

अस्य स्निग्धस्य वर्णस्य विपत्तिर्दारुणा कथम् ।
इदं च मुखमाधुर्यं कथं दूषितमग्निना ॥ १३ ॥

पद्मावती–अय्यउत्तस्स पडिकिदिं पेक्खिअ जाणामि इअं अय्याए
आर्यपुत्रस्य प्रतिकृतिं दृष्ट्वा जानामि इयम् आर्यया
सादिसी ण वेत्ति ।
सदृशी न वेति ।

धात्री—पेक्खदु पेक्खदु भट्टिदारिआ ।
पश्यतु पश्यतु भर्तृदारिका ।

पद्मावती—[ दृष्ट्वा ] अय्यउत्तस्स पडिकिदीए सादिसदाए
आर्यपुत्रस्य प्रतिकृत्याः सदृशतया
जाणामि इअं अय्याए सदिसि त्ति ।
जानामि इयम् आर्यया सदृशीति ।

राजा—देवि चित्रदर्शनात् प्रभृति प्रहृष्टोद्विग्नामिव त्वां पश्यामि ।
किमिदम् ।

पद्मावती—अय्यउत्त इमाए पडिकिदीए सदिसी इह एव्व
आर्यपुत्र अस्याः प्रतिकृत्याः सदृशी इह एव
पडिवसदि ।
प्रतिवसति ।

राजा—किं वासवदत्तायाः ।



पद्मावती—आम ।

राजा—तेन हि शीघ्रमानीयताम् ।

पद्मावती—अय्यउत्त मम कण्णाभावे केणवि बह्मणेण मम
आर्यपुत्र मम कन्याभावे केनापि ब्राह्मणेन मम
भइणिअत्ति ण्णासो णिक्खित्तो । पोसिदभत्तुआ
भगिनिकेति न्यासो निक्षिप्तः । प्रोषितभर्तृका
परपुरुसदंसणं परिहरदि । ता अय्यं मए सह आअदं
परपुरुषदर्शनं परिहरति । तद् आर्यां मया सह आगतां
पेक्खिअ जाणादु अय्यउत्तो ।
दृष्ट्वा जानातु आर्यपुत्रः ।

राजा—यदि विप्रस्य भगिनी व्यक्तमन्या भविष्यति ।
परस्परगता लोके दृश्यते रूपतुल्यता ॥ १४ ॥

[ प्रविश्य ]

प्रतीहारी—जेदु भट्टा । एसो उज्जइणीओ बह्मणो । भट्टिणीए हत्थे
जयतु भर्ता । एष उज्जयिनीयो ब्राह्मणः । भट्टिन्या हस्ते
मम भइणिअ त्ति ण्णासो णिक्खित्तो । तं पडिग्गहिदुं
मम भागिनिकेति न्यासो निक्षिप्तः । तं प्रतिग्रहीतुं
पडिहारं उवट्ठिदो ।
प्रतिहारम् उपस्थितः ।

राजा—पद्मावति किन्नु स ब्राह्मणः ।

पद्मावती—होदव्वं ।
भवितव्यम् ।

राजा—शीघ्रं प्रवेश्यतामभ्यन्तरसमुदाचारेण स ब्राह्मणः ।

प्रतीहारी—जं भट्टा आणवेदि । [ निष्क्रान्ता ]
यद् भर्ता आज्ञापयति ।

राजा—पद्मावति त्वमपि तामानय ।

पद्मावती—जं अय्यउत्तो आणवेदि । [ निष्क्रान्ता ]
यद् आर्यपुत्र आज्ञापयति ।

[ ततः प्रविशति यौगन्धरायणः प्रतीहारी च ]

यौगन्धरायणः—भोः [ आत्मगतम् ]

प्रच्छाद्य राजमहिषीं नृपतेर्हितार्थं
कामं मया कृतमिदं हितमित्यवेक्ष्य ।
सिद्धेऽपि नाम मम कर्मणि पार्थिवोऽसौ
किं वक्ष्यतीति हृदयं परिशङ्कितं मे ॥ १५ ॥

प्रतीहारी—एसो भट्टा । उपसप्पदु अय्यो ।

एष भर्ता । उपसर्पत्व् आर्यः ।

यौगन्धरायणः—[ उपसृत्य ] जयतु भवान् जयतु ।

राजा—श्रुतपूर्व इव स्वरः । भो ब्राह्मण किं भवतः स्वसा पद्मावत्या हस्ते न्यास इति निक्षिप्ता ।

यौगन्धरायणः—अथ किम् ।

राजा—तेन हि त्वर्यतां त्वर्यतामस्य भगिनिका ।

प्रतीहारी—जं भट्टा आणवेदि । [ निष्क्रान्ता ]

यद् भर्ता आज्ञापयति ।

[ ततः प्रविशति पद्मावती आवन्तिका प्रतीहारी च ]

पद्मावती—एदु एदु अय्या । पिअं दे णिवेदेमि ।

एत्व् एत्व् आर्या । प्रियं ते निवेदयामि ।

आवन्तिका—किं किम् ।

पद्मावती—भादा दे आअदो ।

भ्राता ते आगतः ।

आवन्तिका—दिट्ठिआ दाणिं पि सुमरदि ।

दिष्ट्या इदानीम् अपि स्मरति ।

पद्मावती—[ उपसृत्य ] जेदु अय्यउत्तो । एसो णासो ।

जयत्व् आर्यपुत्रः । एष न्यासः ।

राजा—निर्यातय पद्मावति । साक्षिमन्न्यासो निर्यातयितव्यः । इहात्रभवान् रैभ्यो ऽत्रभवती चाधिकरणं भविष्यतः ।

पद्मावती—अय्य णीअदां दाणिं अय्या ।
आर्य नीयताम् इदानीम् आर्या ।
धात्री—[ आवन्तिकां निर्वर्ण्य ] अम्मो भट्टिदारिआ वासवदत्ता ।
अम्मो भर्तृदारिका वासवदत्ता ।
राजा—कथं महासेनपुत्री । देवि प्रविश त्वमभ्यन्तरं पद्मावत्या सह ।
यौगन्धरायणः—न खलु न खलु प्रवेष्टव्यम् । मम भगिनी खल्वेषा ।
राजा—किं भवानाह । महासेनपुत्री खल्वेषा ।
यौगन्धरायणः—भो राजन्

भारतानां कुले जातो विनीतो ज्ञानवाञ्छुचिः ।
तन्नार्हसि बलाद्धर्तुं राजधर्मस्य देशिकः ॥ १६ ॥

राजा—भवतु । पश्यामस्तावद् रूपसादृश्यम् । संक्षिप्यतां यवनिका ।
यौगन्धरायणः—जयतु स्वामी ।
वासवदत्ता—जेदु अय्यउत्तो ।
जयतु आर्यपुत्रः ।
राजा—अये असौ यौगन्धरायणः । इयं महासेनपुत्री ।

किन्नु सत्यमिदं स्वप्नः सा भूयो दृश्यते मया ।
अनयाप्येवमेवाहं दृष्टया वञ्चितस्तदा ॥ १७ ॥

यौगन्धरायणः—स्वामिन् देव्यपनयेन कृतापराधः खल्वहम् । तत् क्षन्तुमर्हति स्वामी । [इति पादयोः पतति]
राजा—[ उत्थाप्य ] यौगन्धरायणो भवान् ननु ।

मिथ्योन्मादैश्च युद्धैश्च शास्त्रदृष्टैश्च मन्त्रितैः ।
भवद्यत्नैः खलु वयं मज्जमानाः समुद्धृताः ॥ १८ ॥

यौगन्धरायणः—स्वामिभाग्यानामनुगन्तारो वयम् ।
पद्मावती—अम्महे अय्या खु इअं । अय्ये सहीजणसमुदाआरेण
अहो आर्या खल्वियम् । आर्ये सखीजनसमुदाचारेण

अजाणन्तीए अदिक्कन्दो समुदाआरो । ता सीसेण
अजानन्त्या अतिक्रान्तः समुदाचारः । तच् छीर्षेण
पसादेमि ।
प्रसादयामि ।

वासवदत्ता—[ पद्मावतीमुत्थाप्य ] उट्ठेहि उट्ठेहि अविहवे उट्ठेहि ।
उत्तिष्ठ उत्तिष्ठ अविधवे उत्तिष्ठ ।
अत्थिसअं णाम सरीरं अवरद्धइ ।
अर्थिस्वं नाम शरीरम् अपराध्यति ।

पद्मावती—अणुग्गहिदह्मि ।
अनुगृहीतास्मि ।

राजा—वयस्य यौगन्धरायण देव्यपनये का कृता ते बुद्धिः ।

यौगन्धरायणः—कौशाम्बीमात्रं परिपालयामीति ।

राजा—अथ पद्मावत्या हस्ते किं न्यासकारणम् ।

यौगन्धरायणः—पुष्पकभद्रादिभिरादेशिकैरादिष्टा स्वामिनो देवी भविष्यतीति ।

राजा—इदमपि रुमण्वता ज्ञातम् ।

यौगन्धरायणः—स्वामिन् सर्वैरेव ज्ञातम् ।

राजा—अहो शठः खलु रुमण्वान् । the minister of K. Udyan

यौगन्धरायणः—स्वामिन् देव्याः कुशलनिवेदनार्थमद्यैव प्रतिनिवर्ततामत्रभवान् रैभ्योऽत्रभवती च ।

राजा—न न । सर्व एव वयं यास्यामो देव्या पद्मावत्या सह ।

यौगन्धरायणः—यदाज्ञापयति स्वामी ।

[ भरतवाक्यम् ]

इमां सागरपर्यन्तां हिमवद्विन्ध्यकुण्डलाम् ।
महीमेकातपत्राङ्कां राजसिंहः प्रशास्तु नः ॥ १६ ॥

[ निष्क्रान्ता सर्वे ]

षष्ठोऽङ्कः ।

इति स्वप्ननाटकमवसितम् ।

May our King rule over this world like a chakravarti Raja — going up to the ocean

V. [illegible]

Vidya Sagar

## Stanzas attributed to Bhāsa in Various anthologies.

The *Sārṅgadharapaddhati* an anthology compiled in the 14th century A. D., attributes the following stanzas to Bhāsa.

The reference is to the edition of Peterson, published in 1888.

No. 3292. p. 474-5.

अस्या ललाटे रचिता सखीभिर्
विभाव्यते चन्दनपत्रलेखा ।
आपाण्डुरक्षामकपोलभित्ताव्
अनङ्गबाणव्रणपाट्टिकेव ॥ भासस्य ॥

No. 3330. p. 482.

दयिताबाहुपाशस्य
कुतोऽयमपरो विधिः ।
जीवयत्यर्पितः कण्ठे
मारयत्यपवर्जितः ॥ भासस्य ॥

No. 3640. p. 541.

कपोले मार्जारी पय इति कराँल्लेढि शशिनस्
तरुच्छिद्रप्रोतान्बिसमिति करी संकलयति ।

---

1. This stanza is attributed to Bhāsa also by Jalhaṇa in his *Sūktimuktāvali*. The same occurs as no. 1487 on p. 250 in the anthology of Vallabhadeva who reads भित्तेः for भित्तौ ।
2. This stanza is attributed to Kalaśaka by Vallabhadeva, see no. 1529. p. 258. The *Saduktikarṇāmṛta* attributes the same stanza to *Śyāmala* of cashmere.

रतान्ते तल्पस्थान्हरति वनिताप्यंशुकमिति

प्रभामत्तश्चन्द्रो जगदिदमहो विप्लवयति ॥ भासस्य ॥

No. 3907. p. 593.

तीक्ष्णं रविस्तपति नीच इवाचिराढ्यः

शृङ्गं रुरुस्त्यजति मित्रमिवाकृतज्ञः ।

तोयं प्रसीदति मुनेरिव चित्तमन्तः

कामी दरिद्र इव शोषमुपैति पङ्कः ॥ भासस्य ॥

Vallabhadeva attributes the following stanzas to Bhāsa in his anthology *Subhāṣitāvali*.

The reference is to the edition of Peterson :

No. 1286. p. 214.

बाला च सा विदितपञ्चशरप्रपञ्चा

तन्वी च सा स्तनभरोपचिताङ्गयष्टिः ।

लज्जां समुद्वहति सा सुरतावसाने

हा क्वापि सा किमिव किं कथयामि तस्याः ॥ भासस्य ॥

No. 1353. p. 226.

दुःखार्ते मयि दुःखिता भवति या हृष्टे प्रहृष्टा तथा

दीने दैन्यमुपैति रोषपरुषे पथ्यं वचो भाषते ।

---

1. This stanza occurs as no. 1994 on p. 341 in the anthology of Vallabhadeva who also attributes it to Bhāsa. The *Saduktikarṇāmṛta* however attributes the same to Rajaśekhara.

2. This stanza is also found in the *Saduktikarṇāmṛta* which attributes it to Bhāsa.

कालं वेत्ति कथाः करोति निपुणा मत्संस्तवे रज्यति
भार्या मन्त्रिवरः सखा परिजनः सैका बहुत्वं गता ॥

भासस्य ।

No. 1619. p. 275.

कठिनहृदये मुञ्च क्रोधं सुखप्रतिघातकं
लिखति दिवसं यातं यातं यमः किल मानिनि ।
वयसि तरुणे नैतद्युक्तं चले च समागमे
भवति कलहो यावत् तावद् वरं सुभगे रतम् ॥

भासस्य ।

No. 1628. p. 276.

कृतककृतकै र्मायासख्यैस्त्वयास्म्यतिवंचिता
निभृतनिभृतैः कार्यालापै र्मयाप्युपलक्षितम् ।
भवतु विदितं नेष्टाहं ते वृथा परिखिद्यसे
ह्यहमसहना त्वं निःस्नेहः समेन समं गतम् ॥

भासस्य ।

The following stanzas are attributed to Bhāsa in the *Saduktikarṇāmṛta*.

No. 2383.

दग्धे मनोभवतरौ बाला कुचकुम्भसंभृतैरमृतैः ।
त्रिवलीकृतालवाला जाता रोमावली वल्ली ॥

भासस्य ।

No. 1112.

प्रत्यासन्नविवाहमङ्गलविधौ देवार्चनव्यस्तया
दृष्ट्वाग्रे परिणेतुरेव लिखितां गङ्गाधरस्याकृतिम् ।
उन्मादस्मितरोषलज्जितरसै र्गौर्या कथंचिच्चिराद्
वृद्धस्त्रीवचनात् प्रिये विनिहितः पुष्पाञ्जलिः पातु वः ॥

भासस्य ।

No. 2872.

विरहिवनितावक्त्रौपम्यं बिभर्ति निशापतिर्
गलितविभवस्याज्ञेवाद्य द्युति मसृणा रवेः ।
अभिनववधूरोषस्वादुः करीषतनूनपाद्
असरलजनाश्लेषक्रूरस्तुषारसमीरणः ।। भासस्य ।।

The *Sūktimuktāvali* compiled by Jalhaṇa attributes the following stanza to Bhāsa.

यदपि बिबुधैः सिन्धोरन्तः कथंचिदुपार्जितं
तदपि सकलं चारुस्त्रीणां मुखेषु विलोक्यते ।
सुरसुमनसः श्वासामोदे [ शशी ] च कपोलयोर्
अमृतमधरे तिर्यग्भूते विषं च विलोचने ।। भासस्य ।।

# बुद्धस्वामीविरचितो बृहत्कथाश्लोकसंग्रहः ।

## अथ पिङ्गलिकाख्यानं नाम चतुर्थः सर्गः ।

अस्ति वत्सेषु नगरी कौशाम्बी हृदयं भुवः ।
सन्निविष्टानुकालिन्दि तस्यामुदयनो नृपः ॥ १४ ॥*
महावरोधनस्यापि भार्याबुद्धि र्द्वये स्थिता ।
तस्य वासवदत्तायां पद्मावत्यां च भूपतेः ॥ १८ ॥
महाप्रभावा नृपतेः शार्ङ्गपाणे र्भुजा इव ।
सकाया इव चोपायाश्चत्वारो मित्रमन्त्रिणः ॥ १९ ॥
ऋषभश्च रुमण्वांश्च तथा यौगन्धरायणः ।
वसन्तकश्चेति स तैः सह कालमयापयत् ॥ २० ॥
अस्माकं तु धनस्यास्य मेदिनीमण्डलस्य च ।
अवसाने विना पुत्रात्पालकः को भविष्यति ॥ ४६ ॥
इति पुत्रगतां चिन्तामुपासीनस्य भूपतेः ।
दीर्घश्वाससहायस्य दिवसाः कतिचिद् ययुः ॥ ४७ ॥

## अथ दोहदसंपादनो नाम पञ्चमः सर्गः ।

अथ संप्रेषितास्थानः सचिवानब्रवीन्नृपः ।
यद् ब्रवीमि निबोधन्तु भवन्तस्तत्सचेतसः ॥ १ ॥
तदस्ति यदि वः कांक्षा निष्प्रजानां प्रजां प्रति ।
आरभध्वं मया सार्धं देवताराधनं ततः ॥ ६ ॥

---

* The original number of the stanzas is preserved. Intervening lines are omitted. When the 1st hemistich alone is quoted, a single stroke only is used; when the second hemistich alone is quoted, double stroke is used.

सचिवैरभ्यनुज्ञातस्तथेति प्रतिपन्नवान् ॥ १० ॥
स पुण्ये ऽहनि संपूज्य देवताग्निद्विजन्मनः ।
ययौ नागवनोद्यानं सदारः सह मन्त्रिभिः ॥ ११ ॥
मागधी तु कृतोत्साहा देव्या वासवदत्तया ।
अलमालि तवानेन खेदेनेति निवारिता ॥ १२ ॥
उक्ता च ननु बालासि मृणालीतन्तुकोमला ।
अनुभूतसुखा चासि भ्रातुर्भर्तुश्च वेश्मनि ॥ १३ ॥
दुःसहानि तु दुःखानि मया निन्दितभाग्यया ।
अनुभूतानि तेनाहं शक्ता दुःखमुपासितुम् ॥ १४ ॥
यश्च मे भविता पुत्रः स भवत्या भविष्यति ॥ १५ ॥
इति तस्यां निवृत्तायां सह वासवदत्तया ।
तपोभिरचिराद् राजा राजराजमतोषयत् ॥ १६ ॥
मासद्वयपरीमाणे ततः कालेऽतिगच्छति ।
देव्यां सत्त्वसमावेशवार्तां प्रावर्तयत्क्षितौ ॥ ८३ ॥
म्लायन्मधूकविच्छायकपोलं जिह्मलोचनम् ।
श्वश्रूस्तस्या मुखं दृष्ट्वा बुबुधे दोहदव्यथाम् ॥ ८६ ॥
पृच्छति स्म च तां पुत्रि शीघ्रमाचक्ष्व दोहदम् ।
अनाख्याते हि गर्भस्य वैफल्यमपि दृश्यते ॥ ८७ ॥
लज्जमाना यदा नासौ कथयामास दोहदम् ।
तदा स्ववृत्तं सा वध्वै व्याहर्तुमुपचक्रमे ॥ ८८ ॥
अन्तर्वत्नीमपृच्छन्मामेकदा श्वशुरस्तव ।
बाधते दोहदो यस्त्वां स क्षिप्रं कथ्यतामिति ॥ ८९ ॥
मया तु प्रणयिन्यापि प्रकृष्टतरलज्जया ।
सखीमुखेन कथितं बहुकृत्वोऽनुयुक्तया ॥ ९० ॥
सा च संपादितामात्यैः शतानीकस्य शासनात् ॥ ९१ ॥

सुयामुनमथारुह्य पद्मरागनगारुणम् ।
दिग्दाहादिव रक्तानामपश्यं मण्डलं दिशाम् ॥ ९४ ॥
अथ पक्षानिलभ्रान्तसंभ्रान्तजनवीक्षितः ।
ज्येष्ठपुत्र इवागच्छद्गरुडस्य विहंगमः ॥ ९५ ॥
सरसामिषगृद्धश्च मुग्धामादाय मामसौ ।
अगमद् गगनं वेगाच्छतानीकस्य पश्यतः ॥ ९६ ॥
ततः प्रदेशे कस्मिंश्चिदवतारितवान्स माम् ।
भक्षयिष्यन्निषिद्धश्च केनाप्याकाशमाश्रयत् ॥ ९७ ॥
पश्यामि स्म च तत्र द्वौ कृशावृषिकुमारकौ ॥ ९८ ॥
तौ मामवोचतां देवि मा भैषीरयमाश्रमः ।
वसिष्ठस्याश्रितः पुण्यामुदयाद्रेरुपत्यकाम् ॥ ९९ ॥
वन्दितश्च मया दूरादाशिषा मामवर्धयत् ॥ १०१ ॥
न चोत्कण्ठा त्वया कार्या स्वजने मत्सनाथया ॥ १०२ ॥
इति विश्वास्य मां वाक्यैर्मधुरैरेवमादिभिः ।
आवासः क्रियतां वध्वा इति शिष्यान्समादिशत् ॥ १०३ ॥
तापसी कृतसानाथ्या तत्राहमवसं सुखम् ।
ऋषिभिः क्रियमाणेषु गर्भसंस्कारकर्मसु ॥ १०५ ॥
प्रसूता चास्मि दशमे मासे पुत्रं पतिं तव ॥ १०६ ॥
जातकर्म ततः कृत्वा सूर्यवंशगुरुः स्वयम् ।
दिवसे द्वादशे नाम पुत्रस्य कृतवान्मम ॥ १०७ ॥
बालो जातः सुजातोऽयं यस्मादुदयपर्वते ।
तस्मादुदयनो नाम प्रसिद्धिमुपयात्विति ॥ १०८ ॥
वेदे गान्धर्ववेदे च सकलासु कलासु च ।
शास्त्रेषु चास्त्रशस्त्रेषु बुद्धिरस्य विनीयत ॥ १०९ ॥
गच्छत्सु दिवसेष्वेवं वसिष्ठेनैष वारितः ।

मा कदाचिद् भवानस्माद् दूरं गादश्रमादिति ॥ ११० ॥
निसर्गकर्कशत्वाच्च क्षत्रजातेस्तपोवनात् ।
निर्याय मृगयामेष समक्रीडत कानने ॥ १११ ॥
एकदा भ्राजमानोऽयं दिव्यैः स्रक्चन्दनादिभिः ।
अभिवादितवान्भीतो वसिष्ठं दर्शितस्मितम् ॥ ११२ ॥
इति भोगवतीं दृष्ट्वा सोऽहमायामि संप्रति ।
ममास्मिन्नपराधे च प्रमाणं भगवानिति ॥ १३७ ॥
वसिष्ठस्तमथावोचदुपायोऽयं मया कृतः ।
येन नागकुमारास्ते दृष्टिगोचरतां गताः ॥ १३८ ॥
इदानीमपि तैः सार्धं गत्वा भोगवतीं त्वया ।
गान्धर्वं हस्तिविद्या च शिक्षितव्याः सविस्तराः ॥ १३९ ॥
यदि च ग्राहयेत्किंचित् त्वां नागाधिपतिस्ततः ।
सनागमूर्छना ग्राह्या वीणा घोषवती त्वया ॥ १४० ॥
अंकमारोपितायां च तन्त्र्यो यस्यामनाहताः ।
मधुरं निस्वनेयुस्तां विद्याःघोषवतीमिति ॥ १४१ ॥
गुरोरुदयनः श्रुत्वा नागलोकं गतस्ततः ।
गते बहुतिथे काले वीणापाणिरुपागतः ॥ १४२ ॥
ततश्चारभ्य दिवसादुदयाचलचारिणः ।
नागानुदयनोऽगृह्णाद् रम्यै घोषवतीरुतैः ॥ १५० ॥
एवं याति क्वचित्काले भगवान्मामभाषत ।
दारकस्तरुणो जातः कौशाम्बीं गम्यतामिति ॥ १५२ ॥
तच्छिष्यास्तु तदादिष्टा मामादाय सपुत्रकाम् ।
आकाशेन नयन्ति स्म क्षणेन नगरीमिमाम् ॥ १५४ ॥
सोऽयं मयेदृशो लब्धः पुत्रः संपाद्य दोहदम् ।
तवापि दोहदो यः स पुत्रि संपाद्यतामिति ॥ १७५ ॥

अथ राज्ञाव्रदद् देवीं देवि किं स्थीयतेऽधुना ।
विमानमिदमारुह्य यथेष्टं गम्यतामिति ॥ २८१ ॥
अवोचत्सा च राजानमार्यपुत्र त्वया विना ।
नोद्यानमपि गच्छामि कुतोऽनालम्बनां दिवम् ॥ २८२ ॥
सान्तःपुरपरीवारः सदारसचिवस्ततः ।
सपौरश्रेणिवर्गश्च यानमध्यास्त भूपतिः ॥ २८४ ॥
पुण्यमाकाशमाविश्य प्राक् प्राचीमगमद् दिशम् ॥ २८५ ॥
ददर्श दर्शकस्तत्र यानं यान्नगरोपरि ।
देवो विद्याधरो वापि भोः कोऽयमिति चाब्रवीत् ॥ २८६ ॥
पद्मावतीद्वितीयेन स च राज्ञाभिवादितः ।
अनुज्ञातश्च संयातो नृपः पवनवर्त्मना ॥ २८७ ॥
इति प्रदक्षिणीकृत्य स भुवं सागराम्बराम् ।
अवन्तिनगरीं प्रायात् .... ... ... ॥ २८८ ॥
स्तम्भयामास तद्यन्त्रमथातुष्यन्नराधिपः ॥ २८९ ॥
प्रद्योतस्य तदालोक्य रत्नप्रद्योतपिञ्जरम् ।
किमेतदिति संदेहदोलादोलमभून्मनः ॥ २९० ॥
संदिहन्मानस्येति प्रद्योतस्य पुरः शरम् ।
पातयामास वत्सेशः शनकैर्लेखिताक्षरम् ॥ २९२ ॥
महासेनस्तमादाय चित्रमेतदवाचयत् ।
राजन्नुदयनश्चौरः सदारस्त्वां नमस्यति ॥ २९३ ॥
इति श्रुत्वा महासेनो जामातरमभाषत ।
चौराय दत्तमभयं तस्मादवतरत्विति ॥ २९४ ॥
कांचिद्वेलामुपास्यैवमामन्त्र्य श्वशुरौ ततः ।
लोकालोकितयानश्च कौशाम्ब्यामवरूढवान् ॥ २९६ ॥

# श्रीक्षेमेन्द्रविरचिता बृहत्कथामञ्जरी ।

## कथामुखनामा द्वितीयो लम्बकः ।

कौशाम्बी शांभवीव श्रीरस्ति स्वस्तिमती पुरी ॥ ४ ॥
शतानीको ऽभवत्तत्र राजा राजेन्द्रशेखरः ॥ ६ ॥
बभूव तस्य राज्याब्धेः कर्णधारो महामतिः ।
मन्त्री युगंधरो नाम शक्रस्येव बृहस्पतिः ॥ १२ ॥
सेनानीः सुप्रतीपश्च विप्रः शास्त्रार्थवित्तथा ।
स्वैरेच्छानर्मसचिवस्तथाभूद्वल्लभो विभोः ॥ १३ ॥
तस्य विष्णुमती नाम विष्णोः श्रीरिव वल्लभा ॥ १४ ॥
ततो मुनिप्रसादेन राजा दशरथोपमः ।
इष्ट्वा राममिव प्राप सहस्रानीकमात्मजम् ॥ १८ ॥
महिष्या सह भूपाले संप्राप्ते कीर्तिशेषताम् ।
भेजे राज्यं शतानीकतनयो मन्त्रिणां गिरा ॥ २६ ॥
ततः कालेन तनयां क्ष्मापतेः कृतवर्मणः ।
तामाससाद दयितां सर्वस्वं पुष्पधन्वनः ॥ ३५ ॥
सा तस्माद्गर्भमाधाय भवानीवेन्दुशेखरात् ।
पाण्डिम्ना शशिलेखेव पीयूषक्षालिता बभौ ॥ ३७ ॥
अत्रान्तरे मन्त्रिवरः सेनानीश्च महीपतेः ।
द्विजो नर्मवयस्यश्च पुत्रान्प्रापुः कुलोचितान् ॥ ३८ ॥
सुतो युगन्धरस्यासीच्छ्रीमान्यौगन्धरायणः ।
रुमण्वान्सुप्रतीपस्य द्विजस्य च वसन्तकः ॥ ३९ ॥
ततस्तामामिषधिया सुपर्णकुलसंभवः ।
जहार विकटः पक्षी मुग्धां दग्धविधेर्वशात् ॥ ४३ ॥
नीत्वा विहायसा दूरं स तामचलसंनिभः ।
तत्याज मोहविवशामुदयाचलकन्दरे ॥ ४४ ॥

ततो यदृच्छया यातस्तां विलोक्य तथा स्थिताम् ।
निनाय करुणासिन्धु र्मुनिपुत्रस्तपोवनम् ॥ ५० ॥
सुतेवाश्वासिता तत्र कृपया जमदग्निना ।
असूत तनयं काले सेनान्यमिव पार्वती ॥ ५१ ॥
तस्याकाशभवा वाणी चकारोदयनाभिधाम् ॥ ५२ ॥
आश्रमे स मुनीन्द्रेण कृतचूडादिकस्ततः ।
ववृधे बालकशशी सह मातु र्मनोरथैः ॥ ५३ ॥
सोऽपश्यन्मृगयासक्तो व्याधबद्धं भुजङ्गमम् ॥ ५४ ॥

दीनमालोक्य भुजगं शबराय धनार्थिने ।
अमोच्यत्स्वजननीदत्तं दत्वा स्वकङ्कणम् ॥ ५५ ॥

स सर्पो मोचितस्तेन नागो भूत्वा कृताञ्जलिः ।
सख्यं विधाय पातालं निनाय तमुदारधीः ॥ ५६ ॥

ताम्बूलीस्रजमम्लानां वीणां घोषवतीमपि ।
अवाप्य राजतनयः फणीन्द्रात्स्वाश्रयं ययौ ॥ ६० ॥

अत्रान्तरे स शबरः कौशाम्ब्यां वणिजं ययौ ।
सहस्रानीकनामाङ्कमणिकङ्कणविक्रयी ॥ ६२ ॥

श्रुत्वा वलयसंप्राप्तिकथां कृत्वा पुरोगमम् ॥ ६५ ॥

शबरं तां दिशं हृष्टः प्रतस्थे सह मन्त्रिभिः ।
जामदग्न्याश्रमं प्राप निर्वैरहरिकुञ्जरम् ॥ १३९ ॥

अयं त्वत्तो नरपते मृगावत्यां यशोनिधिः ।
जातः श्रीमाञ्छुभो जेता धनंजय इवापरः ॥ १४१ ॥
उक्तवति मुनिना दत्तं गृहीत्वोदयनं नृपः ।
प्रिया सहायः स्वपुरीं प्रतस्थे मन्त्रिभिर्वृतः ॥ १४२ ॥
यौगन्धरायणो मन्त्री रुमण्वान्वाहिनीपतिः ।

Having said these words the sage took hold of Udayana and gave to the king, who accompanied the queen and surrounded by the ministers set out for the Capital.

V. Imp

Imp

वसन्तको नर्मसुहृद्राजसूनोरभूत्ततः ॥ १४४ ॥

इति श्रीक्षेमेन्द्रविरचितायां बृहत्कथायां कथामुखलम्बके
सहस्रानीककथानाम प्रथमो गुच्छः ।

## अथ द्वितीयो गुच्छः ।

कुलोचितपदं याते पार्थवंश्ये महीपतौ ।
प्रियासहायस्तत्सूनुश्चक्रे शास्त्रोदितां क्रियाम् ॥ १ ॥
यौगन्धरायणन्यस्तराज्यचिन्तापरोऽनयत् ।
कालं वीणाविनोदेन स मृगव्यामसेवत ॥ २ ॥
अत्रान्तरे श्लथारम्भं तं ज्ञात्वोज्जयिनीपतिः ।
चक्रे चण्डमहासेनस्तज्जयाय ततं मनः ॥ ४ ॥
कन्या वासवदत्तेयं तद्योग्यैव सुता मम ।
निसर्गशत्रुर्नार्थ्यो मे मानी स च न याचते ॥ ५ ॥
बध्नाति कुञ्जरान्नित्यं वीणानादहृतान्वने ।
ग्राह्यः स क्रूरनागेन विधायेति धियं पुरः ॥ ९ ॥
दिदेश दूतं कृतकप्रणयोपायनैः सह ।
वत्सेश्वराय संदेशमभ्यधाच्च दृढाशयः ॥ १० ॥
पुत्री मे कुलसर्वस्वमियं गान्धर्ववेदिनः ।
वीणायां श्रुतितत्त्वज्ञशिष्यतां तव वाञ्छति ॥ १२ ॥
तदेह्युज्जयनीं देव प्रणयाद् दुहितुर्मम ॥ १३ ॥
इत्युक्त्वा प्रेषितो दूतः कौशाम्बीं त्वरितो ययौ ।
तत्रोदयनमासाद्य यथादिष्टं न्यवेदयत् ॥ १४ ॥
वीणां वासवदत्तासौ ज्ञास्यत्यभ्येत्य मत्पुरीम् ।
शिष्यो गुरुगृहं याति न हि शिष्यगृहं गुरुः ॥ १६ ॥
(इति प्रतापसंदेशं प्राप्य दूते गते नृपः)

यौगन्धरायणो मन्त्री चुकोपावन्तिभूभुजे ॥ १६ ॥
अत्रान्तरे प्रतिवचो दूतादाकर्ण्य निःस्पृहम् ।
ध्यायंश्चण्डमहासेनः किमपि व्याकुलो ऽभवत् ॥ ३१ ॥
योधैरन्तः कृतावासं चण्डो यन्त्रमहागजम् ।
विन्ध्याटव्यां ससर्जाशु सशैलमिव जङ्गमम् ॥ ३२ ॥
तं विलासालसगतं विलोलश्रवणाननम् ।
व्याधैः सुरगजाकारं विवेदोदयनो नृपः ॥ ३३ ॥
गजेन्द्रबन्धकुशलो विवेशैको महद्वनम् ॥ ३४ ॥
कूटकुञ्जरमालोक्य वीणामधुरगीतिभिः ।
स जिघृक्षुर्मुधा तस्थौ सेवाभिरिव दुर्जनम् ॥ ३६ ॥
तस्मिन्घोषवतीव्यग्रे योधाः कुञ्जरानिर्गताः ।
अभ्यापयुः सुसंरब्धाः सहसा तं जिघृक्षवः ॥ ४१ ॥
स तानशङ्कितो दृष्ट्वा धैर्यनिष्कम्पमानसः ।
मण्डलोत्तालचरणो जघान सुभटान्रणे ॥ ४२ ॥
पैः सहाभ्येत्य महाकालवरोऽर्जितः ।
एको वीरवरः पश्चाज्जग्राह छद्मना नृपम् ॥ ४३ ॥
वत्सेश्वरं समासाद्य स विवेश निजां पुरीम् ॥ ४४ ॥
ततः प्रणम्य वत्सेशं सह पौरैर्व्यजिज्ञपत् ।
मान्योऽसि मम राजेन्द्र न हि मे किल्बिषं त्वयि ॥ ४६ ॥
इत्युक्त्वा तनयामस्मै न्यवेदयदमन्दधीः ।
वीणाज्ञेयकलाज्ञाने शिष्येयं भवतामिति ॥ ४७ ॥
तां ददर्श ततो राजा नीलनीरजलोचनाम् ॥ ४८ ॥
विलोक्य राजतनयां स कम्पतरलो ऽभवत् ॥ ५२ ॥
राजपुत्री तमालोक्य लज्जानतमुखी बभौ ॥ ५३ ॥
प्रेमप्रणयशालिन्या सेव्यमानस्तया नृपः ।

